सर्ववेदागमादीनां व्याख्याता जायतेऽचिरात् ॥

अथाघोरमन्त्रविधानमुच्यते —

अघोर ऋषिः । त्रिष्टुप् छन्दः । अघोररुद्रो देवता ॥ हुं बीजम् । ह्रीं शक्तिः । ह्रीं स्फुर स्फुर हृत् । प्रस्फुर प्रस्फुर शिरः । घोर घोर तनुरूप शिखा । चट चट प्रचट प्रचट कवचम् । कह कह वम वम नेत्रत्रयम् । बन्ध बन्ध खादय खादय (घातय घातय) हुंफट् अस्त्रम् ॥ ध्यानम् —

काळाभ्राभः कराग्रैः परशुडमरुकौ खड्गखेटौ च बाणे-
ष्वासौ शूलं कपालं दधदतिभयदो भीषणास्यस्त्रिणेत्रः ।
रक्ताकाराम्बरोऽहिप्रवरघटितगात्रोरिनागग्रहादीन्
खादन्निष्टार्थदायी भवदनभिमतछित्तये स्यादघोरः ॥

ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम *बन्धय बन्धय खादय खादय हुंफट् ॥ इति मन्त्रः । रक्षाप्रधानोयं मन्त्रः ॥

अथ पदन्यासः —

कदृगास्यकण्ठहृन्नाभ्यन्धूरुषु जानुजङ्घयोः पदयोः ।
एकादशधा भिन्नैर्मन्त्रार्णैः न्यसतु विग्रहे मन्त्री ॥

एकादशधा विभागप्रकार उच्यते —

पञ्चभिरथो सपड्भिः द्वाभ्यामप्यष्टभिश्चतुर्भिश्च ।
षड्भिश्चतुर्भियेग च षड्भिर्द्वाभ्यां च भेदितैः क्रमशः ॥

---

* बन्ध बन्ध घातय घातय इति ख, ग, ङ, मातृकापाठः ।

चतुस्त्रयेणेति कहादिचतुष्कं वमादिचतुष्कं वन्धादिचतुष्कं च । त्रिभिरित्यर्थः ॥ सर्वपदादौ प्रणवशक्ती योजनीये । लक्षजपः ॥

स्वच्छो मुमुक्षोस्तु भवेदघोरः काम्यक्रियायामथ रक्तवर्णः ।
कृष्णोऽभिचारे ग्रहवैकृते च प्रोक्तो जपः स्यादपि लक्षमानः ॥

घृतावसिक्तैस्सतिलैस्सतण्डुलैर्वा घृताप्लुतैर्हविर्भिर्वा दशांशं पुरश्चरणाहोमः ॥

अथ पूजायाः पीठविधानार्थं यन्त्रविधानमुच्यते—

हृल्लेखास्थितसाध्याक्षरविलसितकर्णिकं कलावीतं
वर्गाष्टकात्तकेसरमन्त्ये सहळक्षयाक्षरोल्लसितम् ।
मन्त्राक्षरत्रयोद्यद्दळमध्यदलाग्रकं च तद्बाह्ये
वह्निपुराश्रसमाश्रितकरचास्त्रं प्रतिविलिख्य यन्त्रमिदम् ॥

अस्यार्थः— अष्टपत्र पद्मं विलिख्य तत्कर्णिकायां भुवनेशीं विलिख्य तन्मध्ये साध्यनामादीन्विलिखेत् । पुनः कर्णिकायां स्वरैः सबिन्दुकैः साध्यनामादीन् वेष्टयेत् । पुनर्दलमूले कादीन् मान्तान् पञ्चसु दलमूलेषु लिखित्वा, षष्ठे यादित्रयं सप्तमे वादित्रयं च अष्टमे सादिचतुष्टयं च विलिखेत् । पुनः अघोरमन्त्राक्षराणि त्रीणि त्रीणि दलमध्ये विलिखेत् । अवशिष्टाक्षराणि त्रीणि त्रीणि दलाग्रेषु विलिखेत् । पुनस्तद्बाह्ये षट्कोणं विलिख्य, तेषु प्राग्रक्षोनिलकोणेषु हुं इति विलिखेत् । प्रत्यगग्नीशकोणेषु फडिति विलिखेत् ॥

अस्मिन्यन्त्रमण्डले प्रासादोक्तशैवपीठे पञ्चगव्यैर्वा क्वाथोदकेन वा पुरश्चरणकलशं संपूर्य अघोरमूर्तिं समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । परशवे नमः डमरुकाय० खड्गाय० खेटाय० बाणाय० धनुषे० शूलाय० कपालाय० ८ इति द्वितीयावृतिः । मातृभिस्तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी । अथवा पूर्वोक्तपञ्चाक्षरवत् पूजां कुर्यात् ॥

अथ प्रयोगः —

आज्यापामार्गसमित्तिलसर्षपपायसाज्यकैश्च पृथक् ।
रात्रौ सहस्रहोमात् भूतद्रोहादिशान्तिरुद्दिष्टा ॥

अयमर्थः — अपामार्ग-आघाडा । आज्याद्युक्तद्रव्यमाज्यान्तं च एकैकं सहस्रसंख्यं रात्रौ क्रमेण षड्भिर्दिनैर्जुहुयात् । पिशाचादिनिवृत्तिः ॥

प्रयोगान्तरम् —

सितकिंशुकनिर्गुण्डीकनकापामार्गजन्मनां समिधाम् ।
पृथगपि सहस्रहोमात् निग्रहमोक्षौचिराद्ग्रहाणां स्यात् ॥

निर्गुण्डी-निर्गुडी-நொச்சில் सितकिंशुकं-வெள்முருக்கு अपामार्ग-आघाडा-நாயுருவி कनक-धोत्रा-ஊமத்தை एतैः पृथक् पृथक् सहस्रहोमात् ग्रहाणां निग्रहमोक्षौ भवतः ॥

प्रयोगान्तरम् —

गव्याक्तैर्जुहुयात् पृथक् दशशतं मन्त्री मयूरेध्मकैः
भूयस्तैश्चतुरंगुलैश्च शिवपञ्चम्यां निशायां हुनेत् । इति ।

मयूरं-अपामार्गं । चतुरंगुलं-कोन्नै । शिवपञ्चमी - शुक्लपञ्चमी । उत्तरार्धोक्तफलमेवात्रापि द्रष्टव्यम् ॥

प्रयोगान्तरम् —

सर्पिर्मार्गसपञ्चगव्यचरुभिः सर्पिस्ससंपातकं
हुत्वा तं प्रतिभोजयेत् प्रतिशमं यान्त्येव सर्वे ग्रहाः ॥

अयमर्थः — मार्गमित्यपामार्गम् । सर्पिषा च अपामार्गेण च पञ्चगव्येन पाचितचरुणा च पुनरपि सर्पिषा चेत्येतैः पृथक्पृथक् सहस्रं हुत्वा संपातं च गृहीत्वा, संपातं साध्यं प्रतिभोजयेत् । ग्रहपीडा नश्यति ॥

अथास्यैवाघोरमन्त्रस्य यन्त्रान्तरमुच्यते –

पट्कोणे कर्णिकायां स्फुरयुगलघृतां साध्यगर्भां च शक्तिं
कोणाख्ये प्रस्फुरद्वन्द्वकमथ विलिखेत् मन्त्रवर्णान्दळेषु ।
षड्वेदद्वन्द्वषड्वेदकचतुर्युगषट्संख्यकान् बाह्यषट्के
वर्मास्त्राणं तदेतद्ग्रहगदभयहृद्यन्त्रमाघोरमाहुः ॥

अस्यार्थः – प्रथमं षट्कोणं विलिख्य तत्कर्णिकायां भुवनेशीं विलिखेत् । तदन्तः साध्यनामादीन् विलिखेत् । पुनः स्फुर स्फुर इति चतुर्भिरक्षरैः भुवनेशीं विलिखेत् । पुनः षट्सु कोणेषु प्रस्फुर प्रस्फुरेत्येकैकमक्षरं विलिखेत् । पुनरवशिष्टमन्त्रवर्णान् दळेषूक्तविभागेन विलिखेत् । पूर्वदळे षडक्षराणि, पुनरपि चत्वारि, पुनश्चत्वारि, पुनष्षट्, पुनश्चत्वारि, पुनरपि चत्वारि, पुनरपि चत्वारि पुनष्षट्, एवं क्रमेण दळेषु विलिख्य, पुनर्बाह्ये षट्कोणं विलिख्य तेषु प्राग्रक्षोनिलकोणेषु हुं इति वर्माक्षरं विलिखेत् । प्रत्यगग्नीशकोणेषु फडित्य-स्त्राणं विलिखेत् । इति ॥

अघोरमन्त्रजपपूजादेः फलश्रुतिः —

नतु रिपवो नच रोगा न ग्रहपीडा न शस्त्रबाधा च ।
न क्ष्वेळरुजो मर्त्यान् स्पृशन्त्यघोरास्त्रमन्त्रजापात्तान् ॥

अथ अघोरास्त्रमन्त्रप्रसङ्गात् कल्पांतरोक्तप्रकारेण अघोरभस्मविधिरप्यत्र लिख्यते–

उशीरं चन्दनं कोष्ठं घनसारं सकुङ्कुमम् ।
श्वेतार्कमूलं वाराहीलक्ष्मीक्षीरमहीरुहाम् ॥

त्वचो बिल्वतरोर्मूलं शोषयित्वा सुचूर्णयेत् ।
चूर्णं व्योम्नि गृहीतेन गोमयेन विमिश्रितम् ॥

कृत्वा पिण्डानि संशोष्य संस्कृते हव्यवाहने ।

मूलेन दग्ध्वा तद्भस्म शुद्धपात्रे विनिक्षिपेत् ।
केतकीमालतीपुष्पैः वासयेत् भस्म शोधितम् ॥

अयुतं प्रजपेन्मन्त्रं स्पृष्ट्वा भस्म सुपूजितम् ।
एतदादाय दिनशः प्रातः पुण्ड्रं करोति यः ॥

तस्य रोगाः प्रणश्यन्ति कृत्याद्रोहमहाग्रहाः ।

उशीरं–वाळा । घनसारं–कर्पूरम् । वाराही–भूतालम् । लक्ष्मी–श्रीताळी ॥

अथाघोरास्त्रमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तः पाशुपतास्त्रमन्त्रोपि लिख्यते —

वामदेव ऋषिः । पङ्क्तिः छन्दः । पशुपतिर्देवता । श्लीं बीजम् । हुं शक्तिः । प्रणवादिमन्त्राक्षरैः षडङ्गन्यासः ॥ ध्यानम् —

पञ्चवक्त्रं महाबाहुं दशबाहुं त्रिलोचनम् ।
भीषणं भास्करं रुद्रं पिङ्गभ्रूश्मश्रुमूर्धजम् ॥

खड्ग-खेटक-नाराच-धनु-श्शर कमण्डलून् ।
शक्तिं शूलं च परशुं ब्रह्मदण्डं कराग्रकैः ॥

बिभ्राणं स्फटिकाभ्राभं नागाभरणभूषितम् ।
सर्वास्त्रेशं पशुपतिं सर्वरक्षाकरं स्मरेत् ॥

ओं श्लीं पशु हुं फट् । इति मन्त्रः । रक्षाप्रधानोयं मन्त्रः । अक्षरलक्षजपः । पायसेन दशांशं होमः । अथ पूजा —

प्रासादोक्तपीठे समावाह्य समर्चयेत् । तत्पुरुषादिपञ्चब्रह्मनामभिः प्रथमावरणम् । अङ्गैर्द्वितीयावृतिः । प्रासादविधाने पूर्वोक्तैः अनन्ताद्यैस्तृतीयावृतिः ।